प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
नैमिषादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥ ५ ॥
गतानि तेन लोकेऽस्मिन्येन रामायणं श्रुतम् ।
हेमभारं कुरुक्षेत्रे ग्रस्ते भानौ प्रयच्छति ॥ ६ ॥
यश्च रामायणं लोके शृणोति सम एव सः ।
सम्यक् श्रद्धासमायुक्तो लभते राघवीं कथाम् ॥ ७ ॥
सर्वपापात्प्रमुच्येत विष्णुलोकं स गच्छति ।
आदिकाव्यमिदं सर्वं पुरा वाल्मीकिना कृतम् ॥ ८ ॥
यः पठति सदा भक्त्या स गच्छेद्वैष्णवीं गतिम् ।
पुत्रदाराश्च वर्धन्ते सम्पदः सन्ततिस्तथा ॥
सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः ॥ १० ॥

इति रामायणश्रवणविधिः ।

रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुञ्च प्रणमामि पुनः पुनः ॥ १ ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ २ ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ३ ॥
मङ्गलं लेखकानाञ्च पाठकानाञ्च मङ्गलम् ।
मङ्गलं सर्वभूतानां भूमौ भूपतिमङ्गलम् ॥ ४ ॥